तस्य तत्वस्य उपलक्षणत्वे अतिप्रसक्तस्य दंडत्वस्यावच्छेद-कत्वस्वीकारापत्तेरित्युपलक्षणत्वं तत्तायास्तच न सम्भवतीति प्राहुः ॥

विषयितया रूपत्ववज्ज्ञानाभावमादाय रूपवान्पृथिवीत्वादित्यादावव्याप्तिवारणार्थं साध्यतावच्छेदकताघटकसंबंधावच्छिन्नावच्छेदकत्वंनिवेशितं, । न च तादृशरीत्या वन्हिमान्धूमादित्यादावव्याप्तिसम्भवे तत्स्थले त्यागानौचित्यमितिवाच्यं, अग्रे विवक्षणीयसाध्यतावच्छेदकसंबंधेन प्रतियोगिवैयधिकरण्यस्य संयोगेन ज्ञानाधिकरणाप्रसिद्ध्या न संभव इति न च घटपटाद्यनुयोगिककालिकसंबंधेन वन्हित्वविशिष्टस्याभावमादाय तत्राव्याप्तिर्भविष्यतीतिवाच्यं, विशेषरूपेण संसर्गतानभ्युपगमात्, अत्र ज्ञानत्वस्य नावच्छेदकत्वकोटौ निवेशो नातः प्रतियोगितायाः साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वहानिः, विषयितासंबंधेनापि रूपत्वादेः स्वरूपतो भानांगीकारेण च न वा तन्निष्ठावच्छेदकताया निरवच्छिन्नत्वहानिः ॥

यद्यप्यवश्यं क्लृप्ताभिः पर्वतत्ववत्वरत्वादितत्तद्धर्मविशिष्टधूमत्वावच्छिन्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रतीत्युपपत्तौ समान्यधर्मावच्छिनाधिकरणतायां मानाभाव इति जगदीशः । अथाच पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधिकरणतावगाहिप्रतीतौ पर्वतत्ववैशिष्ट्यं य यदि धूमे भासते तदा तस्यैवावच्छेदकत्वंनैवोपपत्तौ धूमत्वस्योपलक्षणतयैवोपचितत्वेन धूमादिनिष्ठनिरूपकतानिरूपिताधिकरणताव्यक्तिभिरेव धूमवानितिप्रतीतिः प्रमात्वोपपत्तौ विशिष्टधूमत्वस्यावच्छेदकत्वकथनविरोधइति चेन्न एकधर्मावच्छिन्नधिकरण-

तानामैक्यमते घटान्यत्वविशिष्टद्रव्यत्ववानितिज्ञानीयघटभेदावच्छिन्नधूमनिष्ठनिरूपकतानिरूपिताधिकरणताया ह्रदेऽपि सत्वात्तमादाय ह्रदो धूमवानितिप्रतीतेः प्रमात्वापत्तेरितिध्येयम्। यदि च समानाधिकरणवृत्तित्वसंबधेन पर्वतत्ववैशिष्ट्यं धूमत्वे भासते तदा धर्मत्वस्यावच्छेदकत्वमेव तन्नतधर्मस्य विशेषणत्वे तस्योपलक्षणत्वाभावात् वैशिष्ट्यस्यावच्छेदकत्वं, अत एव तस्य विशेषणत्वादुपलक्षितप्रच्छन्नविशेषणानंगीकारात् ॥

अन्यच्च तादृशाधिकरणत्वाप्रसिद्ध्या तदभावस्याप्रसिद्धेः सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः, न च धूमत्वे अधिकरणतानिरूपकतावच्छेदकत्वाभावः साध्यइति वाच्यं, सामान्यतोऽधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य यावत्त्ववृत्तितया तदभावस्य सामान्यधर्मावच्छिन्नाधिकरणतावादिनापि स्वीकारात् सिद्धसाधनापत्तेः, न च पर्वतनिष्ठाधिकरणतायाः निरूपकतावच्छेदकतावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावएव धूमत्वगतैकत्वे साध्यत इतिवाच्यं, पर्वतेऽपि तादृशानंताधिकरणतायाः सत्वेन निरुक्तावच्छेदकत्वाभावसाधने सिद्धसाधनापत्तेः। न च तन्निष्ठयत्किंचिदधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावएव साध्यते अतो न सिद्धसाधनमिति वाच्यं, यत्किंचित्वस्याननुगमात्, तन्निष्ठावयवादेर्यत्किंचिदधिकरणातामादायैव पुनः सिद्धसाधनतादवस्थ्यादिति चेन्न। अधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपकत्तानिरूपितनिरूप्यतावन्निरू-

पकतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावो धूमत्वनिष्ठैकत्वे साधरती, वस्तुतस्तु अधिकरणताविशिष्टान्यत्वं धूमत्वनिष्ठैकत्वे साधरतं, वैशिष्ट्यं च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबंधेन ग्राह्यमिति न कोऽपि दोष इति। नव्यास्तु सर्ववादिसिद्धायाः तत्तदधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरेव प्रसिद्धतया तत एवोपपत्तौ पर्याप्तेः सामान्यतोऽधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वस्यानंगीकारात्, तथाच धूमत्वनिष्ठैकत्वत्वे अधिकरणतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसामान्याभावएव साध्यतइत्यर्थएव ग्रंथतात्पर्यमित्यवधेयम्। अथानसामान्यधर्मावच्छिन्नाधिकरणत्वाप्रसिद्धावपि हेतुतावच्छेदकनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणतामादायैव वन्हिमान्धूमादित्यादौ लक्षणसमन्वयसंभवे किं तादृशपारिभाषिकत्वानुसरणेन न च द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ हेतुतावच्छेदकीभूतसत्तात्वनिष्ठावच्छेदकताकनिरूपिकतानिरूपिताधिकरणत्वस्य गुणे सत्वातत्राव्याप्तिरिति वाच्यं हेतुतावच्छेदकताव्यापकनिरूपकतानिरूपिताधिकरणत्वस्य विवक्षितत्वात् व्यापकत्वञ्च स्वावच्छेदकत्वसम्बन्धेनग्राह्यमितिचेन्न। समानाधिकरणवृत्तित्वसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टस्य हेतुतायां द्रव्यत्वादिसाधरकेऽव्याप्तिवारणाय हेतुतावच्छेदकताव्यापकनिरूपकतानिरूपिताधिकरणत्वस्य विवक्षितत्वात् व्यापकत्वञ्च स्वावच्छेदकत्वसम्बन्धेनग्राह्य-

मिति चेन्न। समानाधिकरणवृत्तित्वसम्बन्धेन गुणकर्मान्यत्व-विशिष्टसत्तात्वविशिष्टस्य हेतुतायां द्रव्यत्वादिसाध्यकेऽव्याप्ति-वारणाय हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्ति-कावच्छेदकताकनिरूपकताकाधिकरणत्वस्य विवक्षितत्वात् अत्रावच्छेदकतावच्छेदकसाधारणावच्छेदकत्वं बोध्यं अन्य-था तन्निवेशे तद्दोषतादवस्थ्यात् न चैतन्मते पूर्वकल्पेऽपि उक्तस्थले नाव्याप्तिः हेतुतावच्छेदकताया गुणकर्मान्यत्वा-दावपि सत्वेन तादृशनिरूपकताया हेतुतावच्छेदकत्वा-व्यापकत्वादिति वाच्यं, तद्गुणकर्मान्यत्वस्य साध्यतायां स-मानाधिकरणवृत्तित्वसम्बन्धेन तद्गुणतत्कर्मान्यत्वविशिष्टस-त्तात्वस्य हेतुतायामव्याप्तिः तद्गुणतत्कर्मान्यत्वावच्छिन्नप्र-तियोगिताकभेदविशिष्टसत्तात्वावच्छिन्नाधिकरणतावद्वृत्त्य-भावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्, ए-वं धूमसमानकालीनद्रव्यत्वावच्छिन्नाधिकरणतामादाय व-न्हिमान्धूमादित्यादावव्याप्तिश्च तथा च तादृशाधिकरणत्वाप्र-सिद्धेरेव तत्राव्याप्तिसंगतिः। न च पर्वतत्वविशिष्टधूमत्वा-वच्छिन्नाधिकरणतानिरूपकतावच्छेदकतायास्तद्वृत्तित्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं धूमत्वनिष्ठै-कत्वं तदेव हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकप-र्याप्त्यनुयोगितावच्छेदकं पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधि-करणतामादायैव तत्र नाव्याप्तिरिति वाच्यं प्रतियोगितासम्ब-न्धेन हेतुतायां महानसीयवन्ह्यभावभिन्नं वन्हेरित्यादाव-व्याप्तेः निरुक्ताधिकरणताया महानसीयवन्ह्यभावेऽपि सत्वा-त् अतस्तद्वारणाय हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगि-

ताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावन्निरूपकतानिरूपिताधिकरणत्वस्य लक्षणघटकत्वात् तथा च तादृशाधिकरणत्वाप्रसिद्धैव तत्राव्याप्तिसंगतिरिति ध्येयम् ॥

अथैवं हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानवच्छेदकत्वाभावविशिष्टाधिकरणतावच्छेदकत्वस्याभावस्तथाविधहेतुतावच्छेदकाश्रयाधिकरणत्वमेव हेतुतावच्छेदकावच्छिन्नाधिकरणत्वमित्यनेन कुतो न कृतमिति चेन्न यन्निष्ठाधिकरणतानवच्छेदकत्वमित्यत्राधिकरणत्वमवश्यं हेतुतावच्छेदकसम्बन्धेन ग्राह्यमन्यथा द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादावव्याप्तिर्विशिष्टसत्तात्वे कालिकसम्बन्धावच्छिन्नगुणनिष्ठाधिकरणतानवच्छेदकत्वस्यासत्वेन तादृशविशिष्टाभावस्य हेतुतावच्छेदके सत्वात्, एवं सामान्यतोधिकरणतावच्छेदकमित्यत्रापि अधिकरणत्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यमन्यथा वन्हिमान्धूमादित्यादावव्याप्तिः पर्वतनिष्ठाधिकरणतानवच्छेदकत्वविशिष्टविषयित्वसम्बन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य धूमत्वे सत्वेन तादृशविशिष्टाभावासत्वात्, एवं सति धूमप्रतियोगिकसंयोगेन हेतुतायां पर्वतादिनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतानवच्छेकत्वविशिष्टाधिकरणतावच्छेदकस्याप्रसिद्ध्या वन्हिमान्धूमादित्यादावव्याप्तिरिति ध्येयम् पर्याप्तिनिवेशव्यावृत्तिश्चिन्तनीया ॥

अथात्र कल्पे सम्बन्धान्तरावच्छिन्नसामान्यधर्मावच्छिन्नाधिकरणत्वाङ्गीकारेऽपि विषयित्वसंबन्धावच्छिन्नाधिकरण-

त्वमवश्यं स्वीकरणीयमन्यथा विषयितया घटवानिति प्रतीतिर्यदि घटत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वान्येवावगाहत इति विभाव्यते तदा घट इत्याकारकप्रतीतावपि घटवानिति प्रतीत्यनुपपत्तेः। तथा च नित्यज्ञानभेदे साध्ये विषयित्वसम्बन्धेन घटादिहेतावतिव्याप्तिः स्वाश्रयाधिकरणीभूतनित्यज्ञाननिष्ठाधिकरणतानवच्छेदकतायाः कुत्राप्यसत्वात् यत्पदेन नित्यज्ञानव्यक्तेर्धर्तुमशक्यत्वेन ज्ञानान्तरस्यैव धर्तव्यतया तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति चेन्न नित्यज्ञानान्यत्वविशिष्टघटत्वादावेव तत्प्रसिद्धेरिति ॥

अथ द्रव्यं घटत्वपटत्वोभयस्मादित्यादावतिव्याप्तिस्तादृशहेतुतावच्छेदकावच्छिन्नाधिकरणं पटो घटश्च तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति चेन्न। हेतुतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकीभूतयत्किंचिद्धर्मविशिष्टस्य यत्पदेन विवक्षितत्वादिति। वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसम्बन्धेन, अवच्छेदकत्वं च स्वनिष्ठाधिकरणतानिरूपिताधेयत्वसम्बन्धेन, तथा च घटत्वपटत्वपर्याप्त्यवच्छेदकीभूतं तदुभयत्वं तादृशभेदवत्वसम्बन्धेन तद्विशिष्टसम्बन्धस्याप्रसिद्ध्या नातिव्याप्तिरिति ॥

पूर्वकल्पे अनुगमप्रकारस्तु स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व—स्वाश्रयाधिकरणत्वोभयसम्बन्धेन प्रकृतहेतुतावच्छेदकविशिष्टत्वं अवच्छेदकत्वं च स्वनिष्ठावच्छेदकताकभेदवत्व—स्वसमानकालीनाधिकरणतानिरूपकतावच्छेदकत्वैतदुभयसम्बन्धेन स्वनिष्ठावच्छेदकत्वं च स्वनिष्ठाधिकरण-

तानिरूपकतावच्छेदकत्वसम्बन्धेन बोध्यम् । यद्वा स्वनिष्ठात्यंताभावप्रतियोगित्व—स्वाश्रयाधिकरणत्वोभयसम्बन्धेन हेतुतावच्छेदकविशिष्टत्वमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितम्, प्रतियोगित्वं च निरुक्तोभयसम्बन्धेन बोध्यम् तेन धूमीयसंयोगेन धूमहेतुकस्थले निरुक्तोभयसम्बन्धेनावच्छेदकत्वाप्रसिद्धावपि न क्षतिरिति ध्येयम् । हेतुतावच्छेदकत्वं च नित्यज्ञानावृत्तिविषयिताशून्यज्ञानवृत्तिहेतुतावच्छेदकावच्छिन्नप्रकारतावच्छेदकत्वेन विवक्षणीयमित्यतो द्रव्यं घटत्वपटत्वोभयस्मादित्यादिहेतौ नाव्याप्तिरिति कश्चित् हेतुतावच्छेदकावृत्तिधर्म एव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितः, वृत्तित्वं च स्ववृत्यभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसम्बन्धेनेत्यपि कश्चित् । परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इति नाध्यक्षमिति दीधितिः । परितः—सर्वावयवावच्छेदेन प्रतियोगिग्रहात्मकदोषादित्यर्थः न चैवमपि प्रतियोगिग्रहोत्पत्तिदशायां तत्प्रत्यक्षं दुर्वारम् प्रतियोग्युपलंभकसामग्र्या अपि दोषत्वोपगमादिति जगदीशः तस्यायमाशयः तत्पुरुषीयसंयोगाभावत्वावच्छिन्नलौकिकप्रकारताशालिप्रत्यक्षं प्रति तत्पुरुषीयसंयोगत्वावच्छिन्नलौकिकप्रकारताशालिज्ञानत्वेन प्रतिबन्धकत्वमनुभवसिद्धं प्रतिवध्यस्य विशेषणत्वं प्रतिबन्धकस्य विषयीभूतसंयोगवत्वं सम्बन्धः न च द्रव्ये संयोगाभावप्रत्यक्षस्य कस्याप्यनुत्पत्त्या ईश्वरज्ञानसाधारणज्ञानत्वेनैव प्रतिबन्धकत्वं युक्तं तथा च प्रतियोगिग्रहदशायां नापत्तिरितिवाच्यं,तथासति परितः प्रतियोग्युपलब्धेर्दोषाद्वित्यनेन दोषोत्कीर्तनस्य वैफल्यापत्त्या तादृशरीतिमनुसृत्य भ-

ष्टाचार्यव्याख्यानस्यानुपादेयत्वादिति दिक् ॥

यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्ब-न्धावच्छिन्नप्रतियोगिताकयावदभाववान्स तज्जात्यवच्छिन्नत-त्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानिति जगदीशेनोक्तम्। न चात्र यज्जातिसमानाधिकरणोभयावृत्तिप्रतियोगिताकया-वद्विशेषाभाववत्त्वस्य सम्यक्त्वे उभयावृत्तिधर्मावच्छिन्नत्वनि-वेशवैयर्थ्यमितिवाच्यं, स्वरूपसम्बन्धात्मिकायाः प्रतियोगि-तायाः प्रतिव्यक्तिभेदेन भिन्नतया सत्तागुणत्वावच्छिन्नाभा-वमादाय स्वरूपासिद्धिप्रसंगात् । न च तथापि प्रतियोगि-तासम्बन्धेन यज्जातिसमानाधिकरणोभयावृत्त्यभाववत्त्वस्य हे-तुत्वसंभवे तन्निवेशस्य वैयर्थ्यमिति वाच्यं, समनियताभा-वयोरैक्यमते व्यभिचारापत्तेः, तद्घटीयरूपरसादेः समानका-लोत्पन्नविनष्टस्य योऽभावस्तस्य रूपत्वसमानाधिकरणोभया-वृत्त्यभावान्तर्गततया तदन्ययावद्विशेषाभावस्य तद्घट एव स-त्त्वेन तत्र रूपत्वावच्छिन्नाभावासत्त्वादिति ॥

जात्युपादानात् गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽपि न व्यभिचार इति जगदीशः । अत्र यद्धर्मसमानाधिकरणो-भयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाव-वृत्तियावत्त्वस्यानुगतानतिप्रसक्तधर्मान्तरेण निवेशयितुमशक्य-त्वेन तादृशाभावत्वव्यापकत्वेन निवेश एव कार्यः तादृश-व्यापकत्वं च तादृशाभावत्वसमानाधिकरणभेदप्रतियोगिता-वच्छेदकत्वाभावरूपं वाच्यं, तथा च कंबुग्रीवादिमत्त्वसमा-नाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वसमा-नाधिकरणभेदप्रतियोगितावच्छेदकतात्वमपेक्ष्य घटत्वसमा-नाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वस-

मानाधिकरणभेदप्रतियोगितात्वस्य लघुतया तादृशाभावाप्रसिद्धेरत्र यत्पदेन कंबुग्रीवादिमत्वस्य धर्तुमशक्यत्वात् जात्युपादानवैयर्थ्यमिति चेन्न। व्याप्यतासम्बन्धेन जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्ववृत्तित्वेन यावत्वस्य निवेशात्, व्याप्यत्वं च स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्टावच्छेदकताकभेदवत्वरूपं ग्राह्यं तथा च तादृशाभावाप्रसिद्धावपि तादृशनिखिलाभाववृत्तिसमुदायत्वस्य तादृशाभावत्ववृत्तित्वेन ग्रहीतुं शक्यतया यद्धर्मदेन कंबुग्रीवादिमत्वमादाय व्यभिचारवारणाय तत्सार्थक्यात्॥

यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववानिति व्याख्यायां जातिपदोपादानात् कंबुग्रीवादिमत्वसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नप्रतियोगिताकाभाववति भूतलादौ तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या न व्यभिचार इति जगदीशेनोक्तं,। अत्र यद्यपि साध्याप्रसिद्धिरेव न व्यभिचारः तथापि साध्याप्रसिद्धिरित्येव क्वचित्पाठः साध्याप्रसिद्धिरेव तल्लक्षणाभिप्रायेण, तथाहि यद्यद्धर्मसामानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभावाधिकरणकं तत्तदधिकरणनिष्ठतादृशाभावप्रतियोगितावच्छेदकमित्यत्र तादृशसाध्यप्रसिद्ध्या कंबुग्रीवादिमत्वादौ व्यभिचारो दर्शितः अथवा यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववान्स तज्जात्यवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वसम्बन्धेन तद्वानित्यर्थं एव तात्पर्यं, तथा च साध्या-

भाववद्वृत्तित्वरूपव्यभिचारस्यैव सम्यक्त्वान्न कोपि दोषः ॥

तत्रेदं बोध्यं संयोगी द्रव्यत्वादित्यादौ लक्षणघटकप्रतियोगिवैय्यधिकरण्यदलव्यावृत्त्यर्थं संयोगाभावस्य प्रत्यक्षासंभवेन एतादृशव्याप्त्या एतदनुमीयते तच्च यद्यपि तादृशव्याप्त्या संयोगाभावस्यानुमितिरपि व्याप्तिलक्षणे प्रतियोगिवैयधिकरण्यं विनापि न संभवति संयोगाभावाभावस्य यावद्विशेषाभावाधिकरणे वृक्षादौ सत्वेन संयोगाभावत्वरूपसाध्यतावच्छेदकस्य व्यापकतावच्छेदकत्वविरहात् अतस्तदर्थं प्रतियोगिवैयधिकरण्यनिवेश आवश्यकः तथा च येन प्रकारेण तस्य संगतिस्तच्चैव तस्य प्रयोजनसत्त्वेन संदर्भविरोधः स्यात् तथाऽपि साभान्यव्याप्तौ प्रसिद्धस्थले व्यापकसामानाधिकरण्यरूपव्याप्तेरनुमानांगत्वमसिद्धस्थले वृक्षादौ संयोगाभावादिसाधने साध्यसाधनसहचारमात्रमितिमिश्रादिभिरप्युक्तत्वात्तो न संदर्भविरोधः स्यादित्यास्तां विस्तरः ॥

शब्दो नित्यः सामान्यवत्वे सति विशेषगुणांतरासमानाधिकरणबहिरिंद्रियग्राह्यत्वादित्यादिहेतौ नित्यत्वे साध्ये सामान्यवत्वविशेषणस्य शब्दध्वंसे व्यभिचारवारणाय सार्थक्यं, विशेषगुणान्तरासमानाधिकरणविशेषणस्य रूपादौ व्यभिचारवारणाय सार्थक्यं लौकिकप्रत्यक्षविषयतार्थकस्य बहिरिंद्रियग्राह्यत्वदलस्य मनःक्रियादौ भिचारवारणाय सार्थक्यं,एतन्मते ध्वन्यात्मकशब्दे व्यभिचारवारणाय. पुनर्हेतौ ध्वनिभिन्नत्वं विशेषणं देयम् अनित्यत्वे साध्ये सामान्यवत्वविशेषणस्य शब्दत्वे व्यभिचारवारणाय सार्थक्यं, गगनादौ व्यभिचारवारणाय बहिरिंद्रियग्राह्यत्वदलसार्थक्यं, न च ग्राह्यांतशब्दांशतः स्वरूपासिद्धिरिति वाच्यं, सामान्यवत्वे सति बहिरि-

द्रियग्राह्यत्वादिति दलद्वयस्य बहिरिंद्रियग्राह्यतावच्छेदक-जातिमत्त्वरूपार्थकत्वेन वारणात् पुनर्गगनादौ द्रव्यत्वजा-तिमादाय व्यभिचारणाय तादृशजातौ द्वीन्द्रियग्राह्यतानव-च्छेदकत्वविशेषणं देयम् एवं च जलीयपरमाणुरूपे व्यभि-चारवारणाय विशेषगुणांतरासामानाधिकरण्यदलसार्थक्यं आत्मन्यात्मत्वजातिमादाय व्यभिचारवारणाय बहिः पदम् । अनित्यत्वपक्षे बहिरिन्द्रियग्राह्यत्वस्य लौकिकप्रत्यक्षविषय-त्वरूपं नार्थः । अथान्तरपदस्य स्वरूपासिद्धिवारकतया सा-र्थकत्वमुक्तं तन्न संगच्छते हेत्वप्रसिद्धिवारकतयैव सार्थक्या-दिति चिंतनीयम् ॥

यद्वा यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान्प्रत्येकावच्छिन्नाभाववानित्यर्थः तथा च संयो-गत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्रत्येकावच्छिन्नाभावकूट-वत्त्वस्य पक्षे सत्त्वान्नासिद्धिर्न वा व्यर्थविशेषणत्वमिति जगदी-शः ॥

न चात्रापि प्रत्येकपदस्य स्वरूपासिद्धिवारकतया तद्दोष-तादवस्थ्यमिति वाच्यं, यद्धर्मावच्छिन्नप्रतियोगित्वानां प्रत्ये-कावच्छिन्नाभाववानित्यनेन तादृशप्रतियोगितानिष्ठावच्छे-दकताकाभाववत्त्वस्यैव विवक्षितत्वात्, न च संयोगत्वावच्-छिन्नप्रतियोगी नास्तीति प्रतीतिसिद्धाभावमादाय पक्षे स्व-रूपासिद्धिरितिवाच्यं, तादृशाभावप्रतियोगितावच्छेदकत्व-स्य लाघवेन संयोगत्व एव कल्पनीयत्वादिति न च तत्तत्प्र-तियोगित्वावच्छिन्नाभावप्रतियोगितावच्छेदकं तत्तत्संयोगा-दिनिष्ठतत्तद्व्यक्तित्वमेव लाघवात् न तत्तत्प्रतियोगित्वं त-था च संयोगत्वावच्छिन्नप्रतियोगितानिष्ठावच्छेदकताकप्रति-

योगिताकाभावाप्रसिद्धया हेत्वप्रसिद्धिरितिवाच्यं, जगदीशे-न जातीतरस्य स्वरूपतो भानांगीकारात् स्वरूपतस्तु तत्प्रति-योगित्वस्यैवाच्छेदकत्वस्वीकारात् तदपेक्षया तद्व्यक्तित्वस्या-वच्छेदकत्वकल्पनेन लाघवानवकाशादिति । अथात्र प्रति-योगित्वनिष्ठावच्छेदकत्वं स्वरूपसम्बन्धावच्छिन्नं ग्राह्यमन्य-था कालिकसम्बन्धावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकताक-प्रतियोगिताकाभाववत्वस्य वृक्षादावसत्वेन स्वरूपासिद्धिप्र-संगः न चात्रापि स्वरूपासिद्धिवारकविशेषणस्य वैयर्थ्यमि-ति वाच्यं, यत्किञ्चित्सम्बन्धावच्छिन्नावच्छेदकत्वघटितलक्षणे व्यर्थविशेषणत्वाभावादिति । वस्तुतस्तु यद्धर्मावच्छिन्नप्र-तियोगितात्वव्यापकसमुदायत्वविशिष्टाभाववत्वमेव, हेतुःव्या पकत्वं च स्वाश्रयाभावप्रतियोगितावच्छेदत्वसम्बंधेन बो-ध्यमिति ॥ न चाभिघातत्वसमानाधिकरणतत्तदभिघातत्वा-वच्छिन्नाभाववति वृक्षे ऽभिघातसामान्याभावरूपसाध्यवति निरवच्छिन्नवृत्तिकत्वविशिष्टाभिघातयावद्विशेषाभावसत्वेनो-पाधेः साध्याव्यापकत्वमिति वाच्यं । गुणविभाजकजातेरेव-हेतुसाध्ययोः प्रविष्टत्वादिति जगदीशेनोक्तं तन्न संगच्छ-ते, उपाधिदानार्थं गुणविभाजकजातिनिवेशस्यासंगतत्वा-दिति चेन्न । गुणविभाजकजात्यवच्छिन्नाभावसाध्यकानु-माने उपाधिसत्वेन गुणविभाजकजात्यवच्छिन्नाभावस्य प-क्षावृत्तित्वासिद्धौ सामान्यतो जात्यवच्छिन्नाभावसाध्यकानु-मानस्य निरुपाधित्वेऽपि तद्बलात् विशेषबाधेन सामान्यसि-द्धौ सिद्धसाधनापत्तेर्दुर्वारत्वादेवं सति संयोगत्वावच्छिन्नाभा-वसाध्यकानुमाने उपाधिदाने संयोगाभावे तदभावसिद्धौ सि-द्धसाधनापत्तिसंभवे गुणविभाजकपर्यंतप्रवेशो व्यर्थेति विभाव-

नीयं न च घटाद्यवच्छेदेन ज्ञानादिमाभान्याभाववत्यात्मनि निरवच्छिन्नवृत्तिकतदीययावद्विशेषाभावासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यं, साध्यघटकगुणविभाजकजातेः सविषयकावृत्तित्वेनापि विशेषणीयत्वादिति ध्येयम् ॥ इदं तु चिंत्यते वक्ष्यमाणत्वादिकल्परूपाद्यवृत्तित्वेन जातिविशेषणेनैव सामंजस्ये तत्कल्पस्य परित्यागानौचित्यमिति ॥

यत्त्वेकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टेत्यर्थमाह तच्चिंत्य मिति जगदीशः, तस्यायमाशयः निरवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववत्त्वस्योपाधित्वे कपिसंयोगाभावसाद्ध्योपाधिसाध्यव्याप्तौ व्यभिचारमाशंक्य गुणविभाजकजात्यवच्छिन्नाभावनिवेशनं कृतं जगदीशेन एतन्मते परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभाववत्त्वस्य पक्षे सत्वान्न व्यभिचारः स्वावच्छेदकत्वसम्बन्धावच्छिन्नावच्छेदकताकभेदवत्त्व—स्वप्रतियोग्यधिकरणसमवेतत्वोभयसम्बन्धेन यत्किंचिद्विशेषाभावविशिष्टधर्मानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशेषाभाववत्त्वमुपाधिरिति ॥

नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके साध्यसाधनभेदेन व्याप्तेर्भेदादिति दीधितिः, एतद्व्याख्यानप्रस्तावे सत्तावान् जातेरित्यादावव्याप्तिवारणन्तु अभावे विशेषणताविशेषसम्बन्धावच्छिन्नवृत्तित्वनिवेशादेव संभवति द्रव्यत्वशून्यं सत्वादित्यादौ द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात् द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेकादतिव्याप्तिरिति जगदीशः अथ द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वेऽपि तत्प्रतियोगितानवच्छेदकत्वस्य

वच्छेदके सत्वादतिव्याप्तिनिरासात्तादृशाभावस्यातिरिक्तत्व-खंड़नस्यानौचित्यं जगदीशस्येति चेन्न। द्रव्यभिन्नत्वाभावस्य-अतिरिक्ताभावे कल्पनामपेक्ष्य द्रव्यत्वस्वरूप एव कल्पयितुमुचितत्वेन क्लृप्तद्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावेऽपि कल्पयितुमशक्यतया विशेषणताविशेषसम्बन्धेन वर्तमानस्य तादृशावच्छेदकमेव साध्यतावच्छेदकमतो नातिव्याप्तिरित्याशंक्य द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वं खंड़यति द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वेति अतो न क्वचिदनुपपत्तिरिति । केचित्तु तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वमिति पारिभाषिकत्वलक्षणाभिप्रायेणेदमिति चेन्न । तद्घटवृत्तिरूपध्वंसाभावाभावमादायातिव्याप्तिवारणसंभवे तन्न्यासंगतेरिति ॥

तथापि साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिसत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षितमिति जगदीशः । तस्यायमर्थः साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिवध्यतानिरूपितज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धक--तावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेन तत्वमिति फलितं । नन्वत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थ इति वाच्यं विषयितासम्बन्धेन घटाभावविशिष्टभेदे साध्ये घटाभावविषयकज्ञानत्वादित्यादावव्याप्तेः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य घटाभावानतिरिक्ततया कालिकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नप्रतिवध्य-

साधयतानिरूपितप्रतिबन्धकतावच्छेदकीभूता यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्नप्रकारता तदवच्छेदकीभूतविशेषणताविशेषसम्बन्धेन साध्यतायां गगनत्वादिहेतावव्याप्तिः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यापि साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकीभूतघटत्ववत्त्वबुद्धेः प्रतिबन्धकतावच्छेदकीभूतविशेषणताविशेषेण हेत्वधिकरणवृत्तितया तदवच्छेदकत्वस्य साधयतावच्छेदके सत्त्वादिति वाच्यं, साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नवत्तावुद्धेः प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वं यदभावस्य तदभावीयतादृशप्रतियोगितानवच्छेदकत्वस्य साधयतावच्छेदके विवक्षितत्वात् अथवा स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नसाधयतावच्छेदकसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबधयतानिरूपितप्रतिबन्धकतावच्छेदकीभूतस्वावच्छिन्नप्रकारतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्तितावच्छेदकीभूतं यदनुयोगित्वं तन्निरूपितप्रतियोतानवच्छेदकत्वस्य विवक्षितत्वात् स्वमनुयोगित्वमितिधेयम् ॥

वस्तुतो व्याप्यवृत्तित्वमत्र साधयतावच्छेदकसम्बन्धेन साधयवद्वृत्तिसाधयतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वमिति जगदीशः, अत्रेदं चिन्त्यते विषयितासंम्बन्धेन गगनवज्ज्ञेदस्य साधयत्वे प्रमेयत्वादिहेतावतिव्याप्तिः स्वाश्रयसमवेतनित्यभिन्नत्वसम्बन्धेन रूपवज्ज्ञेदस्य साधयतायां नित्यत्वगगनान्यतरत्वादिहेतावतिव्याप्तिश्च वि-

शेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य हेत्वधिकरणवृत्त्यभावान्तरप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति मैवं साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताग्रहविरोधिताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व—साध्याभावनिष्ठत्वैतदुभयाभाववद्धेत्वधिकरणसम्बन्धितावदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वादिति । वस्तुतस्तु वृत्त्यनियामकसम्बन्धावच्छिन्नत्व—साध्याधिकरणनिरूपितत्वोभयाभाववद्धेत्वधिकरणसम्बन्धितावदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वान्न दोष इति ध्येयं॥ अथ अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वे व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे घटत्वाभाववान् पटत्वादित्यादौ साधनसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावात्मकसाध्यभेदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिरतस्तद्वारणाय साधनसमानाधिकरणाभावीयात्यन्ताभावत्वनिरूपकप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वाच्यं तथा सति तन्मते घटत्वाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकोयोऽभाव स्तस्यापि घटाद्यभावस्वरूपतया साधनसमानाधिकरणघटाद्यभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावस्वरूपात्यन्ताभावत्वनिरूपकप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वेन पुनः लक्षणेऽव्याप्तिरतस्तद्वारणाय साधनसमानाधिकरणाभावीयात्यन्ताभावत्वनिरूपकसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके वाच्यं तथा च इयं गौः सास्नावा इत्यादौ साधनसमानाधिकरणाभावीयात्यन्ता-

भावत्वनिरूपकप्रतियोगितायां साध्यतावच्छेदकसम्बन्धाव-
च्छिन्नत्वाप्रसिद्ध्या ऽव्याप्तिसम्भवे इदमप्यभाववृत्त्यभावो ना-
धिकरणस्वरूप इत्यपि जगदीशग्रन्थासङ्गतिरिति चेन्न ।
व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोगितायां अत्यंताभा-
वत्वनिरूपकत्वमपहाय साधनसमानाधिकरणात्यंताभावी-
यसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्व-
स्य साध्यतावच्छेदके विवक्षितत्वादिति । न च घटा-
द्यभावस्य तादात्म्येन साध्यतायां तद्वत्त्वादिहेतावव्या-
प्तिः साधनसमानाधिकरणघटत्वाभावात्मकघटभेदस्य सा-
ध्यभेदात्मकतया तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रति-
योगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति वाच्यं
हेतुसमानाधिकरणाभावीयहेत्वधिकरणवृत्तितावच्छेदकीभू-
तानुयोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रति-
योगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वा द-
दोष इति । तथा चाभाववृत्त्यभावस्याधिकरणस्वरूपत्वे ना-
व्याप्तिसम्भव इति ध्येयम् ॥ स्वप्रतियोगित्वं यादृशसम्बन्धा-
वच्छिन्नं तादृशसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसा-
मान्यानधिकरणं यद्धेत्वधिकरणं तद्वृत्त्यभावीयसाध्यतावच्-
छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव साध्यता-
वच्छेदके विवक्षणीयं तथा च सद्धेतुस्थल इव द्रव्यत्वाभाववा-
न्सत्वादित्यत्रापि घटाद्यभाव एव प्रतियोगिव्यधिकरण इति
जगदीशः । अत्रेयमापत्तिः पूर्वक्षणवृत्तित्वविशिष्टघटाद्यभा-
वाभाववान् पटत्वादित्यादावव्याप्तिः स्वीयं घटनिष्ठं यत्प्रति-
योगित्वं संयोगसम्बन्धावच्छिन्नं संयोगेन प्रतियोगितावच्-
छेदकावच्छिन्नसामान्यानधिकरणं यत्पटादि तद्वृत्तिघटाभा-

वीयसाध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नपूर्वचणवृत्तित्व-विशिष्टघटाभावाभावनिष्ठप्रतियोगिताया अवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्, न च हेतुमद्वृत्तितावच्छेदकानु-योगितानिरूपितत्वं पटवृत्तित्वविशिष्टघटाभावत्वस्वरूपानु-योगितैव तन्निरूपितत्वं पटवृत्तित्वविशिष्टघटाभावनिष्ठप्र-तियोगितायामेव न तु साध्यतावच्छेदकीभूतविशेषणता-विशेषसम्बन्धावच्छिन्नपूर्वचणवृत्तित्वविशिष्टघटाभावाभाव-निष्ठप्रतियोगितायामतो नाव्याप्तिरिति वाच्यं कपिसंयो-गविशिष्टघटाभावाभाववानेतद्वृचत्वादित्यादावव्याप्तिः न च कपिसंयोगविशिष्टघटाभावाभावस्यापि एतद्वृचे सत्वात् क-थं कपिसंयोगविशिष्टघटाभावाभावसाध्यके एतद्वृचत्वादिकं सद्धेतुरिति वाच्यं, कपिसंयोगस्याव्याप्यवृत्तित्वेन वृचे क-पिसंयोगविशिष्टघटाभावाभावस्यापि मूलावच्छेदेन सत्वा-द्विशेषणस्याव्याप्यवृत्तितया विशिष्टस्यापि अव्याप्यवृत्तित्व-स्य ग्रंथकृतैव व्याप्तिग्रहोपाये विवचितत्वात्। स्वीयघ-टनिष्ठप्रतियोगित्वं संयोगसंबन्धावच्छिन्नं संयोगेन प्रतियो-गितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं वृचादि तद्वृत्तितावच्छेदकीभूतकपिसंयोगविशिष्टघटाभावा-भावत्वस्वरूपानुयोगितानिरूपितसाध्यतावच्छेदकीभूतवि-शेषणताविशेषसम्बन्धावच्छिन्नकपिसंयोगविशिष्टघटाभावा-भावनिष्ठप्रतियोगिताया अवच्छेदकत्वस्य साध्यतावच्छेद-ककपिसंयोगविशिष्टघटाभावाभावत्वे सत्वादनधिकरणान्त-स्य वैयर्थ्यभयेन हेत्वधिकरणवृत्तितायां निरवच्छिन्नत्वस्य निवेशासम्भवात्। न च हेतुमद्वृत्तितावच्छेदकत्वे सति नि-रवच्छिन्नवृत्तितावच्छेदकत्वमप्यनुयोगिताविशेषणं देयम्।

तथा च कपिसंयोगविशिष्टघटाभावस्य सर्वत्राव्याप्यवृत्तितया कपिसंयोगविशिष्टभावत्वरूपानुयोगिताया निरवच्छिन्नवृत्तितावच्छेदकत्वविरहादेवाव्याप्तिप्रुप्रदास इति वाच्यं कपिसंयोगाभावविशिष्टघटाभाववानेतद्वृत्त्वत्वादित्यादावव्याप्तिप्रसङ्गात् गुणपरमाणुनिरूपितनिरवच्छिन्नवृत्तितााया अवच्छेदकत्वस्य साध्याभावत्वे सत्वात्, अत्र केचित् स्वीययन्निष्ठप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्वेत्वधिकरणं तद्वृत्तिसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावीयतन्निष्ठप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् तथा स्वीयघटनिष्ठप्रतियोगित्वं संयोगसम्बन्धावच्छिन्नं संयोगेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं पटादि तद्वृत्तिसाध्यतावच्छेदकविशेषणताविशेषसम्बन्धावच्छिन्नपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठप्रतियोगिताकाभावीया या घटनिष्ठप्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् न तत्राव्याप्तिः न च घटाभाववानात्मत्वादित्यादावव्याप्तिर्घटाभावनिष्ठप्रतियोगित्वं कालिकसम्बन्धावच्छिन्नं कालिकेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्वेत्वधिकरणं आत्मत्वादि तद्वृत्तिसाध्यतावच्छेदकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकस्य पूर्वक्षणवृत्तित्वविशिष्टस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावाभावाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावतया तदीया या घटाभावनिष्ठा प्रतियोगिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति वाच्यं अभावे साध्यतावच्छेदकसम्ब-

न्धावच्छिन्नप्रतियोगिताकत्वमपहाय प्रतियोगितायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व—साध्यनिष्ठत्वोभयाभावस्य विवक्षणीयत्वात् तथा च घटाभाववानात्मत्वादित्यादौ तादृशहेत्वधिकरणवृत्त्यस्य वीयघटाभावनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धातिरिक्तकालिकसम्बन्धावच्छिन्नत्व—साध्यनिष्ठत्वोभयसत्वेन तत्प्रतियोगिताया लक्षणाघटकत्वान्नाव्याप्तिः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान् पटत्वादित्यादौ घटनिष्ठप्रतियोगितायां साध्यनिष्ठत्वविरहेणोभयाभावसत्वात् तत्तत्प्रतियोगितामादायैव लक्षणमन्वय इत्याहुः। केचित्तु हेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितायां स्वप्रतियोगितावच्छेदकयादृशसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यद्धेत्वधिकरणं तादृशसम्बन्धानवच्छिन्नत्वोभयाभावस्य विशेषणताविशेषसम्बन्धावच्छिन्नत्व—साध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य विवक्षणीयत्वात् तथा च पूर्वक्षणवृत्तित्वविशिष्टघटाभाववान्पटत्वादित्यादौ संयोगादिसम्बन्धावच्छिन्नपटाभावीयपूर्वक्षणवृत्तित्वविशिष्टपटाभावाभावनिष्ठप्रतियोगितैव लक्षणघटिकेत्यप्याहुः॥ नन्वास्तु साध्यतावच्छेदकसम्बन्धानवच्छिन्नत्व—साध्याभावनिरूपितत्वोभयाभाववत्प्रतियोगित्वस्य स्वप्रतियोगित्वपदेन विवक्षितत्वात्तथा च संयोगसम्बन्धावच्छिन्नघटनिष्टप्रतियोगितायां साध्यतावच्छेदकसम्बन्धानवच्छिन्नत्व—पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावरूपसाध्याभावनिरूपितत्वोभयसत्वेन लक्षणाघटकत्वात् पूर्वक्षणवृत्तित्वविशिष्टघटाभावात्मकस्य घटाभावानतिरिक्तत्वात्॥ न च द्रव्यत्वाभा-

वस्य विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव द्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोऽपि तथा च द्रव्यत्वाभावनिष्ठं यद् द्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धावच्छिन्नं प्रतियोगित्वं तत्साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नत्व—साध्याभावनिरूपितत्वोभयाभाववत्त्वेन स्वप्रतियोगितावच्छेदकद्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे द्रव्यत्वस्वरूपस्य साध्याभावस्य लक्षणाघटकत्वात् कथं द्रव्यत्वाभाववान्सत्त्वादित्यादावतिव्याप्तिरिति वाच्यं, यत्राऽऽत्मत्वप्रकारकप्रमाविशेष्यत्वस्य तदात्मानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः तस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य दैशिकविशेषणतया साध्यतायां आत्मत्वं हेतुस्तत्र सद्धेतौ हेत्वधिकरणे आत्मनि वर्तमानो यस्तदात्मानुयोगिकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्तत्प्रतियोगित्वं तदात्मानुयोगिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वं तेन तदभावप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्तिर्यस्तदनुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यनिष्ठा या प्रतियोगिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिस्तद्वारणार्थं साध्यतावच्छेदकसंसर्गतावच्छेदकेतरावच्छिन्नसंसर्गतानिरूपितत्व—साध्याभावनिरूपितत्वोभयाभाववत्प्रतियोगित्वस्य स्वप्रतियोगित्वपदेन विवक्षितत्वात् तथा च तदात्मानुयो-

गिकविशेषणताविशेषसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वनिष्ठप्रतियोगितायाः साध्यतावच्छेदकेतरसंसर्गतावच्छेदकेतरतदात्मानुयोगिकत्वावच्छिन्नसंसर्गतानिरूपितत्व—साध्याभावनिरूपितत्वोभयसत्वेन लक्षणाघटकत्वं किन्तु घटाद्यभावीयप्रतियोगितायामेव तथात्वं, तस्याः साध्यतावच्छेदकेतरसंयोगत्वावच्छिन्नसंसर्गतानिरूपितत्वेऽपि साध्याभावनिरूपितत्वाभावसत्वेन तादृशोभयाभावसत्वात्, तथा च द्रव्यत्वाभाववान्सत्वादित्यादौ द्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धेन द्रव्यत्वाभावस्याभावो लक्षणघटकोऽद्रव्यभिन्नानुयोगिकस्वरूपसम्बन्धोवच्छिन्ना या साध्याभावनिरूपिता प्रतियोगिता तत्र साध्यतावच्छेदकसंसर्गतावच्छेदकेतरद्रव्यभिन्नानुयोगित्वावच्छिन्नसंसर्गत्वनिरूपितत्वोभयसत्वात् किन्त्वभावान्तरमादायातिव्याप्तिरिति. संगच्छते यत्र कल्पे घटत्ववान् तत्क्रियात्वादित्यत्र कालिकसम्बन्धेन साध्यत्वे तत्क्रियात्वस्य हेतुतायामव्याप्तिस्तत्र स्वप्रतियोगित्वं यादृशसम्बन्धावच्छिन्नं तादृशसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धनिवेशात् तादृशसम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः न चैतत्क्रियासमानकालीनकालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय नाव्याप्तिर्विभिन्नकालीनवस्तुनः कालिकसम्बन्धेनाधाराधेयभावाकल्पनादिति वाच्यं एतत्कालासमानकालीनपटाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टपटाभावाभावाभावानतिरिक्ततया पूर्वक्षणवृत्तित्वविशिष्टपटाभावाभावरूपस्य प्रतियोगिनः कालिकेन सम्बन्धेन तत्क्रियायामधिकरणत्वसत्वेन प्रतियोगिव्यधिकरणाभा-

वाप्रसिद्धेः, अत्रोच्यते स्वप्रतियोगित्वं यादृशसम्बन्धावच्छि-न्नं तादृशसम्बन्धेन तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्-छेदकावच्छिन्नसामान्यानधिकरणत्वस्य हेत्वधिकरणे विव-क्षितत्वात् एतत्कालासमानकालीनपटाद्यभावमादाय ना-व्याप्तिः एतत्कालासमानकालीनपटाभावप्रतियोगी यः पूर्व-क्षणवृत्तित्वविशिष्टपटाभावाभावस्तन्निष्ठप्रतियोगितायाः स्वा-दृशकालिकसम्बन्धानवच्छिन्नत्वात् पूर्वक्षणवृत्तित्वविशिष्टैत-त्क्रियासमानकालीनपटाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्र-तियोगिताकाभावस्तु न तत्क्रियाऽसमानकालीनपटाभाव-स्वरूपः किंत्वतिरिक्त एवेति । एतेन संयोगादिसम्बन्धेन घ-टाद्यभावस्य विषयितासम्बन्धेन घटाद्यभावभिन्नमेदात्मकत-या विषयितया घटाद्यभाववह्निवन्ह्यादिरूपप्रतियोगिसा-मानाधिकरण्यात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या वन्हि-मान्धूमादित्यादावसम्भवतादवस्थ्यं हेत्वधिकरणवृत्तितावच्-छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छि-न्नसामान्यानधिकरणत्वविवक्षया कथंचित्तद्वारणेऽपि स्वरू-पसम्बन्धेन स्वाधिकरणावृत्तित्वावच्छिन्नाभावस्वरूपतया घ-टाभावस्य स्वरूपसम्बन्धेन स्वाधिकरणावृत्तिवन्ह्यादिरूप-प्रतियोगिसमानाधिकरणतया वन्हिमान् धूमादित्यादाव-व्याप्तिर्दुर्वारैवेत्यपि निरस्तं घटाद्यभावीयवन्ह्यादिनिष्ठप्र-तियोगितायास्तादृशसम्बन्धानवच्छिन्नत्वादिति धेयम् ॥

प्राचां मते संयोगसामान्याभावसाध्यकमात्मत्वंविरुद्धम-तः कपिसंयोगाभाव उक्तः वृक्षादावुत्पत्तिकालावच्छेदेन गु-णसामान्याभावसत्वाद्वृक्षत्वादिकं परित्यज्यात्मत्वं हेतु रुक्तः इति जागदीशी अत्रेयमाशङ्का न च कपिसंयोगवृक्षत्वान्य-

तराभावाभावमादाय कपिसंयोगाभाववान्वृक्षत्वादित्यत्रा-
व्याप्तिसम्भवे कथं तत्परित्यक्तमिति वाच्यं वृक्षत्वकपिसं-
योगान्यतराभावाभावस्य वृक्षत्ववृक्षावृत्तिकपिसंयोगान्यतरा-
भावस्यवा हेतुसमानाधिकरणकपिसंयोगात्मकसाध्याभा-
वप्रतियोगितानवच्छेदकत्वात् न च तथापि संयोगस्वरू-
पाणां वृक्षावृत्तिकपिसंयोगवृक्षत्वान्यतररूपाभावानां प्रति-
योगितावच्छेदकीभूतवृक्षत्ववृत्ति कपिसंयोगवृक्षत्वान्यतरा-
भावत्वावच्छिन्नानधिकरणत्वात् वृक्षस्येति तद्दोषतादवस्थ्यं
न च कपिवृत्तिकपिसंयोगत्ववृक्षत्वान्यतराभावाभावो वृक्षत्व-
रूप एवातिप्रसंगाभावादिति वाच्यं । कपिचरणं वृक्षत्व-
कपिसंयोगान्यतराभावाभाववदिति प्रतीत्यनुपपत्तेरिति वा-
च्यं यत्प्रतियोगित्वावच्छिन्नानधिकरणत्वं हेतुमति सम्भ-
वति तत्प्रतियोगितायां स्ववृत्तिपदार्थविभाजकीभूतधर्मान-
धिकरण प्रतियोगिताकाभावावृत्तित्वं निवेश्यं न च गु-
णसामान्याभावनिष्ठप्रतियोगित्वमपि न तादृशं विशिष्टस्या-
नतिरिक्ततया स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणी-
भूतो यः पूर्वं क्षणवृत्तित्वविशिष्टगुणसामान्याभावाभावः
तत्प्रतियोगिताकाभाववृत्तित्वादिति वाच्यं निरुक्तप्रतियोगि-
तायां स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणवृत्यनुयो-
गिताऽनिरूपितत्वस्य विवक्षितत्वात् स्वपदं हेतुसमानाधि-
करणाभावपरं तथा च स्ववृत्तिपदार्थविभाजकीभूतं यद्
गुणत्वं तदनधिकरणं यद्वृक्षत्वादि तत्तद्वृत्यनुयोगितानिरू-
पितत्वं अन्यतराभावनिष्ठप्रतियोगितायामस्त्येव तथाच
वृक्षत्वादिहेतौ अन्यतराभावाभावमादायैवाव्याप्त्यभावादा-
त्मत्वपर्यंतानुधावनमिति । आत्मत्वादिहेतुकस्थले गुणसा-

मान्याभावनिष्ठप्रतियोगितायां स्ववृत्तिपदार्थविभाजकीभू-
तगुणत्वानधिकरणवृत्यनुयोगित्वानधिकरणवृत्यनुयोगित्वा-
निरूपितत्वादित्यव्याप्तिः सुदृढैवेति ध्येयं ॥ अथ कपिसं-
योगप्रतियोगितावच्छेदकगुणसामान्याभावत्वमादाय कपि-
संयोगाभाववानात्मत्वादित्यादावव्याप्तिकथनमयुक्तं इति गु-
णसामान्याभावाभावस्य घटादिवृत्तिनानागुणस्वरूपकल्प-
नामपेक्ष्य घटादिवृत्तिएकत्वादिस्वरूपकल्पनायाः सुवच-
त्वाल्लाघवादिति । नैवं जन्यज्ञानविशिष्टैकत्वाभाववाना-
त्मत्वादित्यादौ जन्यज्ञानविशिष्टैकत्वस्वरूपसाध्याभावप्रति-
योगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं
हेतुमत इति अव्याप्तिरितिचे ज्जन्यज्ञानविशिष्टैकत्वस्व-
रूपकल्पनामपेक्ष्य लाघवाज्जन्यज्ञानस्वरूपत्वं कल्पनीयं अः
चेदं समाधानं कपिसंयोगाभाववानात्मत्वादित्यादौ त-
त्कपिसंयोगान्यतत्कपिवृत्ति गुणाभावत्वस्यापि संयोगरू-
पसाध्याभावप्रतियोगितावच्छेदकतया तदवच्छिन्नानधिक-
रणस्यात्मनि सत्वादव्याप्तिः सुसङ्गच्छते इति । नचैवं
तत्साध्यकवृक्षत्वादिहेतुकस्थले तत्कपिसंयोगान्यतत्कपिवृ-
त्तिसमवेतान्यसमवेताभावत्वस्यापि कपिसंयोगरूपसाध्याभा-
वप्रतियोगितावच्छेदकतया वृक्षादौ तदवच्छिन्नानधिक-
रणत्वस्य सत्वात् तत्राव्याप्तिवारणासम्भवे तदुपेक्षायां बी-
जाभावादिति वाच्यं संयोगान्यतराभावत्ववारणरीत्यैव त-
द्वारणादिति भाव्यं । अत्र च प्रतियोगितावच्छेदकध-
र्मणावच्छिन्नत्वं साध्यतावच्छेदकताघटकसम्बन्धेन ग्रा-
ह्य तेनायःपिण्डस्यापि कालिकसम्बन्धेन यद्धूमत्वविशिष्ट-
रूपादि तस्य संयोगेनाधिकरणत्वेऽपि नातिव्याप्तिरिति

जागदीशो अथात्र साधनसमानाधिकरणाभावमात्रस्यैव कालिकादिसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टगुणादिसमानाधिकरणत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धया समवायेन गुणवान्महाकालत्वादित्यादावव्याप्तिसम्भवे धूमवान् वन्हेरित्यादावतिव्याप्त्यभिधानमसङ्गतमितिचेन्न तादात्म्येन गगनविशिष्टाभावमादायैव लक्षणसमन्वयात् केनापि सम्बन्धेन स्वप्रतियोगितावच्छेदकीभूतगगनविशिष्टस्य महाकाले सम्बन्धित्वविरहात् न च साध्यतावच्छेदकसमवायेन प्रतियोगिव्यधिकरणत्वाप्रसिद्धैव तादृशाभावस्य लक्षणाघटकत्वमिति वाच्यं महानसानुयोगिकसंयोगेन वन्हेः साध्यतायां तद्धूमादिहेतावव्याप्तिवारणाय प्रतियोगिव्यधिकरणत्वस्य पारिभाषिकस्य ग्रन्थकृतैव प्रागुक्तत्वादिति ध्येयम् । स्वप्रतियोगितावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्व द्वयोर्व्यतिरेक स्वत्वद्यक्तिभेदकूटवत्वं हेतुमतो वाच्यमिति जगदीशः । अत्र स्वाश्रयाधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यं अन्यथा धूमवान्वन्हेरित्यादावतिव्याप्तिः कालिकसम्बन्धेन स्वाश्रयाधिकरणं यदयोगोलकं तन्निष्ठाधिकरणतानवच्छेदकत्वाधिकरणतावच्छेदकत्वद्वयो र्व्यतिरेकस्य प्रतियोगितावच्छेदके सत्वात् तद्व्यक्तिभेदवत्वस्य हेतुमत्यसत्वात्, एव मधिकरणतानवच्छेदकत्वमित्यस्या धिकरणत्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यं अन्यथा तज्ज्ञानान्यत्वविशिष्टसत्तावान्ज्ञानत्वादित्यादावतिव्याप्तिः स्वाश्रयाधिकरणं यत्तज्ज्ञानं तन्निष्टविषयितासम्बन्धावच्छिन्नाधिकरणतानवच्छेदकत्वाभावसत्वात् व्य

तिरेक स्तद्वत्तिभेदकूटवत्वस्य हेतुमत्यसत्वात्, अचायं पूर्वपक्षः वन्हिप्रतियोगिकसंयोगसम्बन्धेन वन्हेः साध्यतायां धूमादिहेतावभावाप्रसिद्धगोव्याप्तिः साध्याभावातिरिक्ताभावप्रतियोग्यधिकरणतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वासिद्धेः साध्याभावप्रतियोगिव्यधिकरणतायां तत्सम्बन्धावच्छिन्नत्वाप्रसिद्धावपि साध्यतावच्छेदके स्वाश्रयाधिकरणत्वनिष्ठाधिकरणतानवच्छेदकत्व—अधिकरणतावच्छेदकत्वद्वयोर्व्यतिरेकस्तत्तद्वत्तिभिन्नत्वस्य हेतुमत्यसत्वादभावाप्रसिद्धेः एवं अधिकरणतानवच्छेदकत्वेत्यत्रापि तथा । न च साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व—साध्यनिरूपितत्वोभयाभावत्वस्य स्वाश्रयाधिकरणतायां निवेशान्नाप्रसिद्धिः एवमधिकरणतानवच्छेदकत्वमित्यत्रापीति वाच्यं प्रमेयमात्रसाध्यकधूमादिहेतावप्रसिद्धेः वन्ह्यभावातिरिक्ताभावप्रतियोग्यधिकरणतायां साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वप्रमेयनिरूपितत्वद्वयोः सत्वाद्वन्हिप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवन्ह्यभावप्रतियोग्यधिकरणतायां तत्सत्वेऽपि तद्वत्तिभिन्नत्वस्य हेतुमत्यसत्वादितिचेत् सत्यं साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणवृत्तिसाध्यनिरूपितत्व—साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वैतदुभयाभावस्य विवक्षितत्वात् घटाद्यभावप्रतियोग्यधिकरणतायामेव साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणवृत्ति साध्यनिरूपितत्वोभयाभावसत्वादितिध्येयम् । अत एव च गोत्वत्वाद्यवच्छेदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गोस्तादात्म्येन

गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिद्ध्यतीति दीधितिः। नन्वयं गौरित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानात् निरवच्छिन्नगोत्वसाध्यकैव भविष्यति साध्यवदन्यावृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधात् धर्मिणो धर्मव्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं गोत्वत्वेति। गोत्वत्वं गवेतरावृत्तित्वमिति जगदीशः। अथात्र समवायेन गोत्वसाध्यकस्थले सास्नादेर्गोरवयवत्वेन समवेतत्वसम्बन्धेनैव तस्य सद्धेतुत्वं तथा च गवेतरनिरूपितसमवेतत्वसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैव तद्धेत्वीयव्याप्तितया गोत्वत्वघटकगवेतरासमवेतत्वस्य तद्धेतौ व्याप्तित्वकथनमनुचितं जगदीशस्येति चेन्न गोप्रतिपाद्यपृथिवीसाधकसास्नादेः सद्धेतुतया तत्स्थलाभिप्रायेणैव तन्निवेशादिति, समवायेन रूपादिहेतुकस्थलाभिप्रायेण वा तल्लिखनादिति ध्येयं। न चैवं यद्यत्सम्बन्धेन यद्धर्माविच्छिन्नानधिकरणत्वं हेतुमतस्तत्सम्बंधान्यसाध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरस्तु तथा च घटवान्महाकालत्वादित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरणः सम्भवतीति वाच्यं, घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः केनापि सम्बन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वादिति, तादात्म्यसम्बन्धेनं तथाविधानधिकरणत्वसम्भवेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यादावव्याप्तेरिति प्राहुरिति जगदीशः। ननु एतल्लक्षणस्य प्रतियोगिव्यधिकरणाभावाघटिततया घटाद्यभावोऽपि प्रतियोगिव्यधिकरण इति जगदीशग्रन्थासङ्गति·

रिति चेन्न । एतल्लक्षणस्य प्रतियोगिवय्यधिकरणाभावघटि-
तत्वे मूलाभिप्रेततया प्रतियोगिवय्यधिकरणाभावघटितमेव-
लक्षणं वाच्यं तथा च यथा प्रतियोगिवय्यधिकरणहेतुमन्निष्ठा-
भावप्रतियोगितावच्छेदकधर्मभिन्नत्वं साध्यतावच्छेदकध-
र्मे निवेश्य मूलोक्तलक्षणस्य परिष्कारो दीधितिकारेण कृत-
स्तथा स्वप्रतियोगितावच्छेदकसम्बंधेन प्रतियोगिव्यधिकरण-
हेतुमन्निष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावीय-
तत्तत्प्रतियोगितावच्छेदकसम्बन्धभिन्नत्वं साध्यतावच्छेदक-
सम्बन्धे निवेश्य लक्षणस्य परिष्कारः कर्तुं शक्यत इत्याशंकाव
ताजगदीशेन घटाद्यभावोऽपि प्रतियोगिवय्यधिकरण इत्यादि-
ग्रन्थस्योक्तत्वादिति धेयम्। अथ हेतुसमानाधिकरणाभावी-
यप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवय्यधिकरणहेतु-
मन्निष्ठाभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितासा-
मान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाव इत्यादि-
क्रमेण निर्वचने घटवृत्तित्वविशिष्टद्रव्यत्ववान्घटत्वादित्यादौ
तादात्म्येन साध्यभेदमादाय दोषवारणसम्भवेऽपि दधित्व-
विशिष्टप्रमेयवांस्थूलदधित्वादित्यादावव्याप्तिः केनापि सम्ब-
न्धेन हेतुमतस्तत्र साध्यतावच्छेदकावच्छिन्नानधिकरण-
त्वासम्भवादिति जगदीशः । अत्र च दधित्ववैशिष्ट्यं सा-
मानाधिकरण्यसम्बन्धेन, तच्च समवायेन दधित्वाधिकरणे
समवायेन वृत्तित्वं तादृशप्रमेयं त्रसरेण्वादिस्वरूपं दधित्वा-
दिकञ्च नतद्व्यणुकं परमाणौ दधित्वजात्यसत्वेन तत्र सामा-
नाधिकरण्यसम्बन्धेन वैशिष्ट्यविरहात् न तदभावो हेत्वधि-
करणे समवायेन नवा तादात्म्येन प्रतियोगिवय्यधिकरण इ-
त्यव्याप्तिः साध्यत्वंच तादात्म्येन बोध्यं समवायेन सा-

व्याप्ते स्थलपदस्य व्यभिचारावारकत्वेन व्यर्थत्वात्तादात्म्येन साध्यतायां तु स्थलपदानुक्तौ द्व्यणुके व्यभिचारापत्तेः तत्र तादृशसाध्यस्य त्रसरेण्वादेः तादात्म्येनाभावात् । नच समवायसम्बन्धेन साध्यत्वे किं स्थूलपदेनेति वाच्यं तथासत्यव्याप्त्यसम्भवेन प्रकृतानुपयोगात् द्व्यणुकरूपे हेत्वधिकरणे साध्यस्य तादात्म्यसम्बन्धेनाभावसत्वात् । अत्रेयमाशङ्का विषयितासम्बन्धमादाय विशिष्टप्रमेयत्वस्य हेत्वधिकरणे सत्वेन प्रतियोगितावच्छेदकतत्तत्सम्बन्धान्यत्वस्य साध्यतावच्छेदकसम्बन्धे सत्वात्तथाव्याप्तिविरहादितिचेन्न विषयित्वादेः संसर्गत्वे मानाभावात् । केचित्तु ज्ञानत्वज्ञानान्यतरस्य समवायेन साध्यतायां प्रतियोगिज्ञानत्वस्य समवायेन हेतुतायामव्याप्तिः तत्र केनापि सम्बन्धेनानधिकरणत्वविरहात् । न च यत्र महाकालानुयोगिककालिकसम्बन्धेनानधिकरणत्वान्नाव्याप्तिरिति वाच्यं विशेषरूपेण संसर्गतानभ्युपगमादिति तन्न दिक्कृतविशेषणतासम्बन्धेन साध्यानधिकरणत्वस्य ज्ञानादौ सत्वादिति धेयम् ॥

कालो घटवान्महाकालत्वादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षितं उभयाभावत्वमपहाय विशिष्टाभावनिवेशे कालो घटवान्महाकालत्वादित्यादावव्याप्तिः गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाप्रसिद्ध्या गगनाभावस्य लक्षणाघटकत्वादिति जगदीशः तन्न सङ्कुचक्रते महाकालाभावस्यैव लक्षणघटकत्वसम्भवात् तादात्म्यसम्बन्ध एव तादृश-

महाकालानुयोगिकत्वविशिष्टमहाकालप्रतियोगिकत्वसम्भवात्, अत्र केचित् तादात्म्यकालिकान्यतरसम्बन्धेन साध्यताश्रयले तावताऽपि अव्याप्तेरपरिहारादिति, न च प्रकृताव्याप्तितादवस्थ्यमिति जगदीशग्रन्थासङ्गतिरिति वाच्यं प्रकृतसाध्यहेतुकाव्याप्तिपरतया तत्संगतेरित्यलं पल्लवितेनेति वदन्ति। प्रतियोगिव्यधिकरणस्यानुगमस्तु हेत्वधिकरणवृत्तिप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयं, वृत्तित्वं च स्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसम्बन्धेन बोध्यम् ॥

इति जागदीश्यन्तर्गतसिद्धान्तलक्षणपत्रिका काशीशांकरी समाप्ता ॥ श्रीकृष्णार्पणमस्तु ॥

---

श्रीगुरुभ्यो नमः ॥

# प्रसिद्धिपत्त्रम् ।

—*—

विदितमस्तु नव्यन्यायशास्त्रीयपदार्थतत्त्वावजिगमिषूणां सर्वेषाम्, सम्प्रति सिद्धान्तलक्षणजागदीश्याः* कालीशङ्करीति पदव्यपदिष्टक्रोडपत्त्रमेतच्छास्त्राधेतृजनसौकर्यसम्पिपादयिषया ऽमुद्रयम् । यत्कृते लोका अमन्दप्रयत्ना महता ऽऽयासेनान्विष्यैतत्पुस्तकमलभमानाः कथमपि स्वीयं कार्यं निर्वर्तयन्तिस्म, यतिष्ये चाचिरेणैवान्येषामवच्छेदकत्वनिरुक्त्यादिग्रन्थानां बलदेवी चान्द्रनारायणीत्यादिपत्त्रिकां सुपरिष्कृत्य मुद्रयित्वा प्रकाशने, आशासे चामुष्मिन् सर्वोपकारके कार्ये साहाय्यं वितीर्य सफलयिष्यन्ति न्यायामृतधाराऽऽप्यायितचेतसः शास्त्ररसिका मामकीनं परिश्रमम्, ।

प्रार्थये च मादृशाल्पज्ञजनमतिमान्द्यात् सीसकाक्षरयोजकदोषेण वा स्खलितान् वर्णान् संकलय्य यदि मामनुगृह्णीयुस्तर्हि कृतार्थमात्मानं मंस्ये इति शम् ।

| | |
|---|---|
| पौषकृष्ण द्वितीयायाम्<br>भृगुवासरे<br>सं० १९५१ | सीतारामशास्त्री द्राविडः |

---

* अमूषां पत्त्रिकाणां कालीशङ्कर्यादिपदवाच्यत्वं कुतस्त्यं को वा कालीशङ्करः कदाऽस्य स्थितिरासीदित्यादि सर्वं तार्किकतरङ्गिण्यामभिहितमिति तत एवा ऽवधेयम् ॥